सत्यानन्दकृतभाष्यसमेता वाजसनेयसंहिताख्यशुक्लयजुर्वेदीया

# ईशोपनिषत् ।

शान्तिपाठः ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ।

ब्रह्माद्वयं ज्ञानरूपं कर्तृभोक्तृमहेश्वरम् ।
सूक्ष्मं स्थूलतमं वन्दे जगत्कारणकारणम् ॥

सत्यानन्दकृतभाष्यम् ।

भाष्यभूमिका ।

ईशावास्यमित्याद्यष्टादशमन्त्रविशिष्टायामुपनिषदि निष्कामी मुमुक्षुरेवाधिकारी ; मुक्तिः प्रयोजनम्; आत्मा विषयः, आत्मलक्षणप्रतिपादनेन मोक्षोपायनिर्देशः संबन्धः । आत्मस्वरूपोपलब्धिरेव मुक्तिः । सा चोपलब्धिश्चित्तशुद्धिसापेक्षा । चित्तशुद्धिश्च कर्मसापेक्षा । येषामात्मस्वरूपोपलब्धिर्जाता, त इहैव मुक्ताः, न तेषां कर्मणि प्रयोजनं, न कर्मद्वेषः । ये पुनरविशुद्धचित्तत्वादनात्मविदस्तैश्चित्तशुद्धिलाभार्थं निष्कामेनेश्वरार्पणबुद्ध्या कर्म कर्त्तव्यम् । इत्थंप्रकारेण कर्माणि कुर्वतां येषामिहैव जन्मनि चित्तशुद्धिर्जायते, ते जीवन्मुक्ता भवन्ति ; देहान्ते चात्मस्वरूपे विलीयन्ते । निष्कामकर्मिणां येषां तु चित्तकलुषाणीहैव न स्खलन्ति, ते देहान्ते क्रममुक्तेः पन्थानं देवयानं प्राप्नुवन्ति । तत्र ते क्रमेण चित्तशुद्धिं लब्ध्वा ब्रह्मलोके तिष्ठन्त्या-

कल्पान्तं, कल्पान्ते च ब्रह्मणि विलीयन्ते। सर्ववेदान्तसिद्धान्तसंमतमेतत्सर्वं व्याख्यास्यामो मन्त्रार्थमुखेन।

चिद्रूपेण ब्रह्मणा परिदृश्यमानं क्षयोपचयलक्षणं सर्वमेव चराचरं जगत्पदार्थमाच्छादनीयं तद्भावभावितव्यमित्युच्यते—

**ईशा वास्यमिदं सर्वं यत् किंच जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥ १॥**

**ईशा वास्यमिति।** ईशा ईशिता शासयिता जगतः सृष्टिस्थितिनाशकर्त्रा ईश्वरेणेत्यर्थः। स च ईश्वरश्चैतन्यस्वरूपः कर्तृत्वस्वभावात्। "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स परेऽक्षरे आत्मनि संप्रतिष्ठते" इति श्रुतेः। **तेन**; ईश्वरेण **जगत् वास्यम्**; आच्छादनीयम्। जगत्पदार्थानां लौकिकदृष्टौ जगद्रूपत्वे सत्यपि परमार्थदृष्टौ तेषां चिद्रूपत्वमवधार्यमित्यर्थः। अनन्ताचिन्त्यशक्तिसंपन्नस्य ब्रह्मणो मायाशक्तिरेव जगद्रूपेण विवर्तयति। सा च शक्तिः, शक्तिशक्तिमतोरभेदत्वाद् ब्रह्माभेदहेतुत्वेन चिद्रूपिणी। सैव सत्त्वरजस्तमोगुणात्मिका जगदुपादानभूता मूलप्रकृतिः। सा च शक्तिरात्मनश्चिद्रूपत्वं नियम्य जडरूपेणाविर्भवति जीवानां कर्मफलभोगसंपादनार्थम्। वस्तुतस्तु जगति न किंचिज्जडमस्ति। "सर्वं खल्विदं ब्रह्म" "आत्मैवेदं सर्वम्" "पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्", "ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वं वरिष्ठम्" इत्यादिश्रुतिवाक्येभ्यः। कर्मफलपरिपाकेन शुद्धचित्ता ज्ञानिनः, सर्वं जगद् ब्रह्मणा आच्छादयन्ति, ब्रह्मस्वरूपेण पश्यन्तीत्यर्थः। **जगत्याम्**; गतेः परिणामार्थत्वात् परिणामवत्सु पृथिव्यादिलोकेषु **यत् किंच** जगत् परिणामि। **तेन** तस्मात् सर्वशो जगतो ब्रह्मभावितत्वात् **त्यक्तेन** त्यक्तं यथा स्यात्, तथा फलाकाङ्क्षात्यागेन अनात्मधारणाविवर्जनेन भुञ्जीथाः। **कस्यस्वित्** निजस्य परस्य वा **धनं** काम्यवस्तु **मा गृधः** मा काङ्क्षी-

रित्यर्थः। स्विदिति निपातो निश्चयार्थबोधकः। यदा सर्वं काम्यवस्तु चिद्रूपेण विभाति, तदा तस्य काम्यत्वमेव विनश्यतीति भावार्थः। भगवताप्युक्तम्—

"प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥" इति॥ १॥

**कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ २॥**

कुर्वन्निति। यो नरः एवंप्रकारेण सर्वं ब्रह्मेति ज्ञानसंपन्नः सन् निष्कामेन फलाभिसंधिराहित्येन कर्माणीन्द्रियव्यापाराणि कुर्वन्, **इह**; पृथिव्यां, **शतं समाः**; शतसंख्यकान् संवत्सरान् दीर्घायुःपरिमितं कालमपि **जिजीविषेत्** जीवितुमिच्छेदिति संबन्धः। **त्वयि**; नरे, युष्मच्छब्दव्यवहारेण नरमात्र उपलक्षितः। **नान्यथा**; नान्यः प्रकारः। इत एवंविधनिष्कामकर्मणोऽस्ति, येन प्रकारेण **कर्म न लिप्यते** कर्मणा न लिप्स्यसे, कर्मफलं न प्राप्स्यसि। अत्रात्मज्ञानिनो जीवन्मुक्तावस्था सूचिता। यावद्देहधारणं विद्यते तावन्न कोऽपि ज्ञानी निष्क्रियो जीवेत्, इन्द्रियादिसंभवादारब्धकर्मवशाच्च। तथाचोक्तं भगवतार्जुनं प्रति—

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥" इति॥

ननु ब्रह्मात्मविज्जीवन्मुक्तः प्रकृतिवशाद्देहधर्मानुरोधेन लोकशिक्षार्थं वा कर्माणि कुर्वन्नपि सर्वत्र ब्रह्मैव पश्यतीत्युक्तमादिमन्त्रेणेशावास्यमित्यादिना। काठकेऽप्युक्तम्;

"पुरमेकादशद्वारमजस्यावक्रचेतसः।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते॥"

इति। स विमुक्त आत्मज्ञानी यदि शतवर्षाण्यपि जिजीविषेत् तथापि न कर्मणा लिप्यते। सन्प्रत्ययो गौरवार्थः बहुतरकर्मानुष्ठानेनापि जीवन्मुक्तस्य न कर्मबन्ध इति दर्शयितुं व्यवहृतः। ज्ञानकर्मणोर्विरोधोऽज्ञानां सकामनिष्कामकर्मपक्षे,

न ज्ञानिनामिन्द्रियादिव्यापारमात्रे बोद्धव्यः। ज्ञानिनामिन्द्रियादिव्यापारो न तत् कर्म यद्बध्नाति जीवं संसारद्रुमे यथा भगवतो वासुदेवस्य क्षात्रधर्मपालनम्।

"न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।"
"आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते॥"

इत्यादि स्मृतिवाक्येभ्यः।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"
"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥"
"यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति॥"

इत्यादिश्रुतिवाक्येभ्यश्च॥ २॥

सम्यगात्मज्ञानलक्षणां जीवन्मुक्तावस्थामुक्त्वा, न भाति नास्ति चैतन्यमिति सम्यगात्मज्ञानाभावलक्षणां मूढावस्थामाह—

**असुर्या नाम ते लोका अन्धेन तमसावृताः।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ३॥**

**असुर्येति।** सुरा ज्ञानिनः, न सुरा असुराः सम्यगात्मज्ञानविहीनाः। "देवासुरा ह वै यत्र संयेतिरे" इत्यादिच्छान्दोग्योपनिषद्वर्णित उपाख्याने "असुराः पाप्मना विविधुः" इत्युक्त्वा तेषामात्मज्योतिविरहितं मूढाहंकाररूपं पापस्वभावं तमःस्वरूपत्वं च निर्दिशति। काठकेऽपि;

"अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते॥"
"अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति॥"

इत्यत्र स्वरूपतटस्थोभयलक्षणस्य ब्रह्मणोऽस्तित्वमनुपलब्धा नास्तिकः सूचितः। गीताशास्त्रेऽपि ;

"प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥"

इत्यादि। असुराणां स्वभावापन्ना लोका असुर्या नाम लोका असुर्यं इति नाम्नाभिधानयोग्याः। यद्वा नामशब्दोऽनर्थकः। ते लोका लोक्यन्ते प्राप्यन्ते विशिष्टजन्मान्तररूपाणि कर्मफलानि। **अन्धेन** दृष्टिविरहितेनात्मज्योतिःशून्येन मोहस्वरूपेण, **तमसावृता** भवन्तीति शेषः। **तांस्ते प्रेत्य;** इमं नरदेहं त्यक्त्वा, **अभिगच्छन्ति;** प्राप्नुवन्ति। के ते? ये के **चात्महनो जनाः;** आत्मानं घ्नन्तीत्यात्महनो बुद्धेर्मूढत्वाद्देहातिरिक्तो जरामरणरहितो बोधस्वरूप आत्मा नास्तीति-भावयन्तो नष्टात्मानः। त्रिविधानि हि कर्मफलानि भवन्ति। यच्चिन्मयब्रह्मणस्तटस्थ-सगुणभावस्योपासनरूपं कर्म तपस्यादिविधौतचित्तेनेश्वरार्पणबुद्ध्या श्रद्धया संपादितं तदर्चिरादिमार्गेण जीवं ब्रह्मलोकं नयति। यतः पुनरावृत्तिर्न विद्यते। ये त्वविशुद्ध-चित्ताः स्वर्गसुखमेव परमं पुरुषार्थं मन्यमानाः, तदर्थमिष्टापूर्तादिकमाचरन्ति सकामेन बुद्ध्या तेषां तत् कर्म धूमादिमार्गेण तान् नयति चन्द्रलोकं यतः पुनरावृत्तिर्भवतीह संसारे। ये पुनर्देहात्मचिन्तका ऐहिकपरा मूढास्तेषां न काचित् पारलौकिकगति-र्विद्यते अर्चिरादिमार्गेण धूमादिमार्गेण वा, परं तु तेऽविच्छेदेन पुनःपुनरावर्तन-शीलानि जायस्वम्रियस्वेतिकीटपतङ्गमशकादिक्षुद्रभूतानि भवन्ति। एषां जायस्वम्रिय-स्वभूतानां लोका असुर्या अन्धेन तमसा पूर्णाज्ञानेनावृताः।

"तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यं चरन्तः।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥"

"इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥"

"अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्" ।

"न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे ॥"

इत्यादिश्रुतिभ्यः ।

"शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥"
"आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥"

इत्यादिस्मृतिभ्यश्च ॥ ३ ॥

पूर्णज्ञानिनो जीवन्मुक्तभावं पूर्णाज्ञानिनो जायस्वम्रियस्वोपलक्षितमन्धतामिस्रभावं च दर्शयित्वा, चिद्रूपिणो ब्रह्मणः स्वरूपतटस्थावस्थयोर्निर्गुणसगुणभावद्वयं दर्शयति—

**अनेजदेकं मनसो जवीयो**
**नैनद्देवा आप्नुवन् पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठ-**
**त्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥**

**अनेजदिति** । अनेजत् "एजृ कम्पने" अकम्पमानं निश्चलमवस्थान्तरविवर्जितं निर्गुणमेकमद्वितीयं सर्वदा सर्वभूतेष्वेकरूपम् । शुद्धचिन्मात्रस्वरूपे निर्गुणे ब्रह्मणि न कोऽपि भेदः संभवति, स्वगतः स्वजातीयो विजातीयो वा । यदा तु तस्मिन् गुणसंबन्धः प्रकटीभवति, तदानन्ताचिन्त्यशक्तिसंपन्ने परमेश्वरे स्वगतभेदा उपजायन्ते तटस्थलक्षणाः, तदुच्यते **मनसो जवीय** इति । मनसो मन उपलक्षितान्तः-

करणाज्जववत्तरं सातिशयेन चञ्चलं परिवर्तनशीलं च । मन एव जगत्पदार्थेषु चञ्चलतमं मुहुर्मुहुर्विभिन्नवृत्तिरूपधारणात् । ब्रह्म तु मायारूपं स्वीकृत्यात्मनि सिसृक्षाक्षोभमुत्पाद्य तत्क्षोभमयं निरन्तरपरिवर्तनशीलं जगत् सृजति । "सोऽकामयत बहु स्यां प्रजायेयेति", "आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किञ्चन मिषत् । स ईक्षत लोकान् नु सृजा इति";

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥"

इत्यादिबहुतरश्रुतिवाक्येषु ब्रह्मणः सृष्टिकर्तृत्वं स्रष्टव्यरूपत्वं चोपदिष्टे । सृष्टिकर्तृत्वात् स्रष्टव्यरूपत्वाच्च ब्रह्म मनसोऽपि जववत्तरम् । मनो यद्यद्वृत्तिरूपं गृह्णाति ब्रह्माग्रे तत्तद्वृत्तिरूपेणात्मानं सृजति मनसः संस्कारानुसारेण कर्मफलभोगसंपादनार्थम् । **नैनद्**; ब्रह्म, **देवाः**; द्योतनाद्देवा इन्द्रियाधिष्ठातृदेवगणा आप्नुवन् । तेषां रजस्तमोमालिन्यात् । श्रुत्यन्तरेऽप्युक्तम्, "स वेत्ति वेद्यं न च तस्यास्ति वेत्ता" इति । काठकेऽपि; "पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्" इति । **पूर्वमर्षत्**; मनस इन्द्रियाणां च व्यापारेभ्यः प्रागेव गच्छत् तदर्थमात्मानं सृष्टिकार्ये नियोजयत् । उक्तं च काठके;

"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥"

इति । यद्वा—यतो ब्रह्मैव मन इन्द्रियाणि स्वस्वव्यापारेषु प्रेरयति, ततस्तत्तेभ्यः पूर्वमर्षत् गतं प्रेरकस्य प्राक्क्रियावत्त्वात् । तलवकारश्रुतौ;

"केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥
श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः चक्षुषश्चक्षुः ।"

इत्यादिवाक्यानि ब्रह्मणः सर्वसंवेदनानां मूलस्वरूपत्वं प्रतिपादयन्ति । श्रुत्यन्तरेऽपि, "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ।

स परेऽक्षरे आत्मनि संप्रतिष्ठते" इति। ब्रह्मणः सगुणनिर्गुणभेदेन विरुद्धधर्मित्वं प्रस्फुटयितुं पुनराह—**तदिति**। तद्; ब्रह्म, **धावतः**; क्रियावतः, **अन्यान्**; मनइन्द्रियादीन्, **अत्येति**; अतिरिच्य गच्छति। एवं सगुणभावमुक्त्वा निर्गुणभावमुच्यते—**तिष्ठत्** अचलत् निष्क्रियं अविकारि ब्रह्मतत्त्वम्। अद्वयस्य ब्रह्मणश्चिन्मात्रस्वरूपत्वात् न वस्त्वन्तरस्वरूपप्राप्तिः संभवति। परं तु तस्याचिन्त्यशक्तित्वात् सृष्टौ मायारूपेणाविर्भावः स्यात्। सा ब्रह्ममयी चिद्रूपिणी माया अनादिकर्मसंस्कारान् सत्त्वरजस्तमोगुणभावेन स्वात्मनि ध्रियते। ततः सा चिन्मयी सत्यपि गुणमयी। गुणाश्च चिच्छक्तिरेव, द्वितीयतत्त्वाभावात्। पूर्णचिन्मयं ब्रह्मैतत्त्रिगुणात्मिकामायारूपेण जगत् सृष्ट्वा, तस्मिन् जीवभावं प्रपद्यते जगल्लीलासिद्धये। "इदं सर्वमसृजत, यदिदं किंच, तत् सृष्ट्वा, तदेवानुप्राविशत्," "असद्वा इदमग्र आसीत्, ततो वै सदजायत, तदात्मानंस्वयमकुरुत" इत्यादिश्रुतिवाक्येभ्यः। **तस्मिन्**; ब्रह्मणि, **अपः**; कर्माणि धर्माधर्मरूपाणि, **मातरिश्वा**; मातरि अन्तरीक्षे श्वयति गच्छतीति मातारिश्वा वायुः प्राणः दधाति धारयति। क्रियात्मकः प्राणः स्वाश्रयाणि कर्माणि ब्रह्मणि स्थापयति तेषां परमार्थतस्तद्रूपत्वात्॥ ४॥

ब्रह्मणो निर्गुणसगुणभेदेन विरुद्धधर्मवत्त्वं विस्पष्टयति पूर्वमन्त्रार्थं पुनरुक्त्वा—

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके।**
**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः॥ ५॥**

**तदेजतीति**। **तत्**; ब्रह्म, **एजति**; चलति सक्रियं भवति, गुणसंबन्धात् मायारूपेण। **तत् न एजति**; निष्क्रियं तिष्ठति गुणसम्बन्धाभावात् पूर्णचित्स्वरूपेण। **तत्**; ब्रह्म, **दूरे**; निर्गुणस्वरूपेणेन्द्रियैर्मनसा वा अप्राप्यत्वात्। "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति श्रुतेः। **तद् उ अन्तिके**; तदेव ब्रह्म समीपे सगुणभावेन जगन्मयत्वात्। तद् अन्तरभ्यन्तरे चिन्मयात्मरूपेणास्य परिदृश्यमानस्य सर्वस्य जगत्पदार्थस्य। "आत्मास्य जन्तोर्निहितो गुहायाम्", "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्", "एको वशी सर्वभूतान्तरात्मा", "य आत्मा सर्वान्तरः" इत्यादिश्रुतिभ्यः। "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"

इति स्मृतेश्च । **तद् उ एव सर्वस्यास्य** जगत्पदार्थस्य **बाह्यतो** भोग्यरूपेण । मुण्डक-श्रुतावपि ब्रह्मणो विरुद्धधर्मवत्त्वं दर्शयति ;

"बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।
दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥"

इति ॥ ५ ॥

सर्वस्यास्य जगतोऽन्तर्बाह्यतो ब्रह्मणः स्थितिमुक्त्वा, जीवन्मुक्तानामात्म-युक्तानां, ब्रह्मविदां सर्वत्रात्मदर्शनं व्याचष्टे—

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥**

**यस्त्विति । यस्तु;** ब्रह्मवित्, **सर्वाणि, भूतानि;** मायापरिणामानि जगद्वस्तूनि, **आत्मनि;** आत्मस्वरूपेण यद् ब्रह्म मयि चित्स्वरूपेणात्मनावतिष्ठते, तदेव मायारूपेण सर्वभूतानीति **अनुपश्यति** उपलभते । **सर्वभूतेषु च आत्मानम्;** भूते भूते य आत्मा चिद्रूपः, स एव ममात्मा घटपटादिष्वाकाशवत् । यथा घटपटादिभेदे प्रत्युत आकाशभेदो न स्यात्, तथा भूतभेदे आत्मभेदो न स्यात् । य एतदुपलभते स **ततः** तस्माद् दर्शनादद्वैतदर्शनहेतोः **न विजुगुप्सते** न निन्दते, आत्मनः परं प्रेमास्पदत्वात् । सर्वभूतेष्वद्वैतात्मोपलब्ध्यभावादेव जीवानां निन्दाप्रवृत्ति-र्जायते, सदा सर्वत्र सुखानवाप्तिहेतोः ।

"एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥"
"आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चनेति ॥"

इत्यादिश्रुतिभ्यः ;

"यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥"
"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥"

"प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥"

इत्यादिस्मृतिवाक्येभ्यश्च ॥ ६ ॥

पूर्वमन्त्रार्थमनुवदत्यद्वैतदर्शिनः शोकमोहापगमं विस्पष्टयितुम्—

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

**यस्मिन्निति । यस्मिन्** आत्मनि **सर्वाणि भूतानि आत्मा एव** अद्वैतात्मतत्त्वमेव अभूत् अनुभूतः । **विजानतः** आत्मतत्त्वज्ञस्य **एकत्वम्** अद्वैतमनुपश्यतः भवितुः पुरुषस्य, **तत्र** तस्मिन् आत्मनि, **को मोहः कः शोक** इति संबन्धः । अनात्मवित्सु बहुत्वमनुपश्यत्स्वेव रागद्वेषादिजन्यशोकमोहौ संभवतः, न त्वात्मवित्सु द्वैतविवर्जितेषु निर्मलचित्तेष्वकामिषु । "नेह नानास्ति किंचन," "मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति" इति काठकश्रुतौ बहुत्वदर्शिनां मूढानामेव शोकमोहाधीनत्वात् पुनः पुनः संसारावृत्तिरुच्यते । अद्वैतदर्शिनस्तु तदभावात् संसारचक्राद्विमुच्यन्ते ;

"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥"

"आत्मैव संविशत्यात्मनात्मानं य एवं वेद य एवं वेद ।" "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिभ्यः ।

"आत्मनं चेद्विजानीयादयस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥"
"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्त्वा धीरो हर्षशोकौ जहाति ॥"

इत्यादिभ्यश्च ॥ ७ ॥

जगत आत्मरूपत्वं तज्ज्ञानस्य च महत्त्वमुक्त्वा, तस्यैवात्मनः शरीरजीवेश्वररूपैः सगुणत्वं, कूटस्थरूपेण निर्गुणत्वं च दर्शयति—

**स पर्यगाच्छुक्रमकायमव्रण-**
**मस्नाविरं शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतो-**
**ऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

**स** इति । **स** आत्मा सगुणः सन्, **पर्यगात्** परिवेष्टितवान् समन्तादाच्छादितवान् शरीररूपेण जीवरूपेण च । कं पर्यगात्? **शुक्रं** शुभ्रं रजस्तमोमालिन्यरहितं द्युतिमन्तम् । **अकायम्**; अशरीरम । **अव्रणम्**; अज्वरम् । **अस्नाविरम्**; स्नावाः सिरा यस्मिन् न विद्यन्ते तमस्नाविरं सिरारहितं सिरोपलक्षितक्रियासाधनरहितं निष्क्रियमित्यर्थः । **शुद्धम्**; पवित्रम् । **अपापविद्धम्**; धर्माधर्मादिसंस्कारवर्जितम् ।

"दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥"

इति श्रुतेः । एतानि ब्रह्मणः स्वरूपलक्षणानि निष्कलभावसूचकानि । यदुक्तं माण्डूक्यश्रुतावात्मनश्चतुर्थपादनिर्णये, "अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" इति । निर्गुणः स शुद्धचिद्रूप आत्मा सगुणेनात्मना जाग्रत्स्वप्नसुषुप्तिलक्षणैस्त्रिभिः शरीरैराच्छाद्यते । एवमाच्छादितोऽपि स आत्मा अशरीर एव शरीराधिष्ठातृत्वेऽपि गुणसंबन्धाभावहेतोः शरीरधर्मग्रहणासंभवात् । तदुक्तं छान्दोग्यश्रुतौ; "मघवन् मर्त्यं वा इद९शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां, न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति । आत्मनो निर्गुणकूटस्थरूपेणाशरीरत्वं, सगुणजीवरूपेण सशरीरत्वमित्यर्थः । सगुणस्यात्मनः स्वभूतगुणक्रियावशाच्छुद्धचिद्रूपत्वं स्वल्पाधिकं प्रच्छन्नं भवति, ततश्च जीवत्वं शरीरत्वं चोपजायेते । निर्गुणः कूटस्थ आत्मा सगुणस्यैतज्जीवशरीरभावाभ्यामाच्छाद्यते । एकमेव तत्त्वं विद्यते नान्यदस्ति किंचनेति सर्वोपनिषदां मतम् । तच्च ब्रह्म चिद्रूपम् । ततश्चिद्रूपमेव सर्वं जगत् । सृष्टौ सा चित् प्रतिदेहं पूर्णापूर्णभावाभ्यामाविर्भवति । पूर्णभावेन सा कूटस्था, अपूर्णभावेन जीवः, शरीरं च । कथं पूर्णा सा भवत्यपूर्णा?

अचिन्त्यशक्तेस्तस्या अनादिसृष्टिशक्तित्वात्। किं तच्छक्तिश्चिदेव? चिद्भिन्ना वा? चिदेव सा शक्तिः; शक्तिशक्तिमतोरभेदत्वात्। कथं चिद्रूपिणी सृष्टिशक्तिश्चैतन्यं ह्रस्वीकरोति? उक्तमेव, ब्रह्मणोऽचिन्त्यशक्तित्वात्। उक्तं च ऐतरेयोपनिषदि; "यदेतद्धृदयं मनश्चैतत्। संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति। एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतीꣳषीत्येतानीमानि च क्षुद्रमिश्राणीव। बीजानीतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणिजङ्गमं च पतत्रि च यच्च स्थावरम्। सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" इति। प्रपञ्चस्य यद्व्यावहारिकजडत्वं तज्जीवानां भोगेच्छारूपकर्मसंस्काराद्भवति। संस्कारवशाज्जीवा भोगमिच्छन्ति, पुनस्तदिच्छापूरणाय भोग्यप्रपञ्चस्याविर्भावः स्यात्। जीवानामपूर्णचिद्भावत्वादेव तेषां भोगेच्छा, प्रपञ्चे जडत्वभोग्यत्वदर्शनं च। ततः संस्कारा एव जीवानामपूर्णचिद्भावत्वस्य कारणानि। ते त्रिगुणात्मिकास्त्रिगुणपरिणामाः। ब्रह्मणो गुणमयी सृष्टिशक्तिर्मायैव कर्मरूपेण कर्मजन्यसंस्काररूपेण च स्वकीयपूर्णचिद्भावमाच्छाद्य जीवादिभावमवाप्नोति।

"छन्दाꣳसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति।
यस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः॥"
"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥"

इत्यादिश्रुतिभ्यः। एषा ब्रह्मणः सृष्टिलीला। "सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत। यदिदं किंच। तत् सृष्ट्वा। तदेवानुप्राविशत्" इति श्रुतेः कामतः कर्मसंस्कारात् तपसो ज्ञानाच्च सृष्टिरित्युपपद्येत। तस्मात् सृष्टिशक्तेर्मायाया मूलप्रकृतेः सगुणब्रह्मणो वा द्विविधं रूपमस्ति; कामरूपं, ज्ञानरूपं च। कामरूपेण सा त्रिगुणात्मिका; ज्ञानरूपेण चिन्मयी। त्रिगुणात्मिका सा स्थूलसूक्ष्मकारणशरीराणां कारणं, चिन्मयी सा शरीराधिष्ठितानां

सर्वसंवेदनानां हेतुः। त्रिगुणाश्च न चिद्भिन्नाः। प्रलये ते ब्रह्मस्वरूपेण तिष्ठन्ति। "आनीदवातं स्वधया तदेकम्, तस्माद्धान्यं न परः किंच नास", "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिश्रुतिभ्यः। प्रलयान्तेऽपि ते ईश्वरात्मना साम्यावस्थायां चिद्रूपेणावतिष्ठन्ते, यस्मात् सगुणब्रह्मण ईश्वरस्य सर्वज्ञत्वनियन्तृत्वादिधर्माः। "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतेः। ते योगिनः देवात्मिकां ब्रह्मात्मिकां शक्तिं सृष्टिशक्तिं स्वगुणैः स्वभूतसत्त्वरजस्तमोगुणैः निगूढाम् गुप्तस्वरूपां अपश्यन्नित्यर्थः। सा च भगवतीशक्तिः सृष्ट्यर्थमंशतः साम्यावस्थामेकरसत्वं परित्यज्य विषमत्रिगुणरूपेणाविर्भवति स्वीययाचिन्त्यशक्त्या। ततो जगत् यस्मिन् सा पुनः विषमगुणसंबन्धाज्जीवरूपेण भुनक्ति, अविषमगुणसंबन्धादीश्वररूपेण सर्वमेतच्छास्ति। न कदाचिद्गुणाश्चिद्भिन्नास्तिष्ठन्ति, चैतन्यस्य सर्वव्यापकत्वात्। ततस्तेषां चिद्भिन्नत्वमप्रतिपन्नम्, प्रलयान्ते चिद्रूपिणो ब्रह्मण आविर्भावात्, पुनः प्रलये तस्मिन्नवसानाच्च। "उद्गीतमेतत् परमं तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाक्षरं च" इति श्रुतेः। त्रयं भोग्यं भोक्ता प्रेरयितेति यावत्; अक्षरं निर्गुणं ब्रह्म। सगुणस्यात्मनः शरीरभावेन जीवभावेन चाच्छादयितृत्वमुक्त्वा नियन्तृत्वमुच्यते—**कविरिति**। **कविः**; क्रान्तदर्शी सर्वद्रष्टा; अनेन कारणशरीराधिष्ठातृत्वं सूचितम्। **मनीषी**; मनस ईशिता नियन्ता; अनेन लिङ्गशरीराधिष्ठातृत्वं सूचितम्। **परिभूः**; परि समन्तात् सर्वेषामुपरि वा भवतीति परिभूः; अनेन स्थूलशरीराधिष्ठातृत्वमपि सूचितम्। **स्वयम्भूः**; स्वयमेव भवतीति निष्कारणः। ईश्वररूपेण जगद्रूपेण वा स स्वयमेव भवति, अचिन्त्यशक्तिमत्त्वात्। स ईश्वरो **याथातथ्यतः** यथाभवितुमर्हति तथा यथातथा, याथातथाभावो याथातथ्यं तदनुसृत्य याथातथ्यतः यथोचितभावेन **अर्थान्** कामान् परलोकार्थानुष्ठितकर्मसंस्कारान् **व्यदधात्** विभज्य स्थापितवान्; **शाश्वतीभ्यः** नित्याभ्यः **समाभ्यः** संवत्सरेभ्यः, संवत्सर इत्युपलक्षणम्, नित्याय कालायेत्यर्थः। अनेन कालस्य नित्यत्वमुक्तम्। "संवत्सरो वै प्रजापतिः। तस्यायने दक्षिणं चोत्तरं च। तद् ये ह वै तदिष्टापूर्ते कृतमित्युपासते। ते चान्द्रमसमेव लोकमभिजयन्ते। त एव पुनरावर्तन्ते तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते। एष ह वै रयिर्दक्षिणः पितृयाणः। अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभि

जयन्ते" इत्यादिप्रश्नोपनिषद्वाक्येषु संवत्सरमासाहोरात्रस्वरूपे प्रजापतौ जनानां कर्माणि व्यवस्थीयन्ते ॥ ८ ॥

किं प्रकाराणि तानि कर्माणि? कुत्र कुत्र च तानि व्यवस्थीयन्ते? इति विशेषेण वक्ष्यति—

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायꣳरताः ॥ ९ ॥**

अन्धं तम इत्यादिमन्त्रेषु । द्विविधं हि पारलौकिकं कर्म; पुनरावर्तन विधायकं, अमृतत्वविधायकं च । यस्तु ब्रह्मविदद्वैतदर्शी 'सर्वाणि भूतान्यात्मन्येवानुपश्यति, सर्वभूतेषु चात्मानम्' 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूत्' न तस्य किंचित् करणीयं विद्यते प्रयोजनाभावात् परलोकस्पृहाभावात्, स इहैव मुक्तो भवति । कर्माणि कुर्वन्नपि न तस्य कर्मबन्ध इत्युक्तं द्वितीयमन्त्रे ।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥"
"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", ॥
"आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ।
पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ते कामाः ॥"
"लीना ब्रह्मणि तत्परा योनिमुक्ताः" इत्यादिश्रुतिभ्यः ।"
"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ।
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।"
"न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥"

इत्यादिस्मृतिभ्यश्च । न तु नित्यशुद्धबुद्धमुक्तब्रह्मज्ञाने सर्वेषामधिकारः । ज्ञानिनामेव ब्रह्मनिष्ठाज्ञानिनां कर्मनिष्ठा । यावन्न चित्तशुद्धिस्तावन्न ज्ञानसिद्धिः । यावन्न वासनाक्षयस्तावन्न चित्तशुद्धिः । यावन्न निष्कामकर्माभ्यासस्तावन्न वासना-

क्षयः। अत एव मुक्तिकामिनामविदुषां सर्वथा निष्कामकर्माभ्यास एव कर्तव्यः, ये त्वविद्वांसो मूढाः स्वर्गवासजन्यसुखाभिलाषिणस्ते श्रौतस्मार्तकर्माणि फलाभिसंधित्सया विधायाविद्यायां वर्तन्ते। न तेषां वासनाक्षयो न संसारनिवृत्तिः।

"अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्याभिमन्यन्ति बालाः।
यत् कर्मिणो न प्रवेदयन्ति रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति॥"

इत्यादिश्रुतिभ्यः।

"आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥"
"त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥"

इत्यादिस्मृतिभ्यश्च। ये पुनर्विद्वांसो गुरुशास्त्रोद्भासितचित्ताः स्वर्गसुखं स्वल्पं मन्यमाना ब्रह्मण आनन्दस्वरूपत्वं विचिन्त्य, संसारदुःखस्यात्यन्तिकोच्छेदमिच्छन्तः सर्वकर्मसूपासितदेवतानां ब्रह्मरूपत्वं विभाव्य, वर्णाश्रमोचितकर्माणीश्वरार्पणबुद्ध्या समाचरन्ति; ते ब्रह्मलोकं प्राप्यामृता भवन्ति। अत एव द्विविधा हि मोक्षभाजिनः; ज्ञानिनः, निष्कामकर्मिणश्च। ज्ञानिन आत्मस्वरूपमवगत्य जीवन्मुक्तावस्थायां प्रतिष्ठिताः सन्तः सुखदुःखे समे कृत्वात्मरतय आत्मन्येवावतिष्ठन्ते। ते अस्माल्लोकात् प्रेत्य विदेहाश्चिद्रूपे ब्रह्मणि विलीयन्ते। निष्कामकर्मिण आत्मनि ब्रह्मस्वरूपमनवगत्यापि सर्वसुखानां दुःखशेषत्वमनुभूय, दृष्टानुश्रविकविषयवितृष्णारूपापरवैराग्यमाश्रित्य, योगमवलम्ब्य निष्कामेन कर्मणा क्रममुक्तेः पन्थानमारोहन्ति। *तत्र ते सत्यलोके चित्तशुद्धिवशात् परवैराग्यं सुखदुःखमयं समदर्शनरूपं ब्रह्माद्वैत-*विज्ञाननिष्ठमवाप्य कल्पान्ते मुच्यन्ते। उक्तं च भगवता वासुदेवेन—

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥
नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥
वेदेषु यज्ञेषु तपःसु चैव दानेषु यत् पुण्यफलं प्रदिष्टम् ।
अत्येति तत् सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥"

इत्यादि ।

"तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतं स पुरुषो ह्यव्ययात्मा ॥"
"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इत्यादिश्रुतिस्मृतिभ्यश्च । ते विद्वंस इष्टापूर्तं वरिष्ठं मन्यमानाः, अपेक्षया न, अद्वय-ब्रह्मज्ञानात् । ननु कथमेषां निष्कामकर्मिणां कर्मप्रयोजनम्? कर्मफलसंन्यासिनां कर्म-संन्यास एव युक्तः, न कर्म । यत् निष्कामेन संपाद्यमानेऽपि कर्मिणः फलज्ञानात् फलमेव प्रयच्छति ब्रह्मलोकवासलक्षणम् । अस्ति प्रयोजनमविशुद्धचित्तत्वाद्ब्रह्मोपल-ब्ध्यभावात् । यावच्चित्तमालिन्यं यावन्न ब्रह्मख्यातिस्तावज्जीवानां नैष्कर्म्यं न संभवति । नापि कर्मेन्द्रियनिग्रहान्नैष्कर्म्यं सिद्ध्यति, मनसश्चाञ्चल्यात् परमात्मनि स्थित्यसंभवाद् विषयसंसर्गाच्च । एतादृशं मनः कर्म करिष्यत्येव, तस्मात् मृषा कर्मेन्द्रियनिग्रहः । भगवतापि कर्मत्यागनिन्दा क्रियते ;

"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ।
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ॥"

"मा ते सङ्गोऽस्त्वकर्मणि" इत्यादिषु । फलतः कर्माधिकारिणां कर्मत्यागे चित्तमालिन्यं भृशं वर्धत एव ; कर्मेन्द्रियव्यापारमुक्तस्य मनसः स्वच्छन्द-

विषयचिन्तनात्। ननु ब्रह्मस्वरूपविचारे तेषां मनस्तिष्ठतु। तत् नाविशुद्धचित्तेन तद्विचारासंभवात्। यदा तु विशुद्धचित्ते ब्रह्मज्योतिः स्फुरति, तदैव स ज्ञानी स जीवन्मुक्तो विचारेण जीवति। अपरेषां मलिनसत्त्वानां कर्मण्येवाधिकारः। "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" इति श्रुतेः। अत्र विद्याशब्देन ब्रह्मोपलब्धिरुच्यते; न देवताज्ञानमात्रम्, देवताज्ञानस्याविद्यया समुच्चयसंभवात्। तच्च कर्म निष्कामेनेश्वरार्पणबुद्ध्या देवताज्ञानेन संपादितं विशोधयति। येषां भाग्यवशेनेहैव तच्छुद्धिर्भवति, ते ज्ञानभूमिकामारुह्य लोकातीतं ब्रह्मपदं प्रविशन्ति। येषां तु न तद्भवति, ते ब्रह्मलोकं प्राप्य तत्र कालेन विधौतचित्तमालिन्याद् ज्ञाने प्रतिष्ठीयन्ते। अन्धं तम आत्मज्योतीरहितं पितृयानं धूमादिमार्गं प्रविशन्ति, येऽविद्यामज्ञानमात्मज्ञानपरिपन्थि सकामं देवताज्ञानवर्जितं केवलं कर्म उपासते आचरन्ति। "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड्दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति। मासेभ्यः पितृलोकम्" इत्यादिश्रुतेः। ततस्तस्मात् तमसो भूय इव अधिकमेव ते तमः प्रविशन्तीति शेषः। य उ; ये तु विद्यायां देवताज्ञाने पञ्चाग्निविद्यायां देवतासु ब्रह्मबुद्ध्या **रताः** परं तु कर्मत्यागिनः। पितृयानपथि कर्मत्यागिनां गतिः कर्मिणां गत्यपेक्षा मूढतरा भवतीत्यर्थः॥ ९॥

**अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे॥ १०॥**

पृथक्कृतयोर्विद्याविद्ययोरिदं पृथक्फलत्वं समुच्चितयोरपि तयोः परमन्त्रोल्लिखितं पृथक्फलत्वमाचार्यैरुक्तम्। **अन्यदेव** पृथगेवाहुः वदन्ति **विद्यया, अन्यदाहुरविद्यया। इति** मतं **शुश्रुम** वयं श्रुतवन्तः **धीराणां** पण्डितानाम्, आचार्याणां **ये** आचार्या **नो**ऽस्मभ्यं **तत्** विद्याविद्याविषयं विचचक्षिरे व्याख्यातवन्तः॥ १०॥

विद्याविद्ययोरेकत्रानुष्ठानेन महत्फलमुपजायते। तत्फलजनने तयोः पृथक्त्वेन किं साफल्यमस्ति? तदुक्तम्—

**विद्यां चाविद्यां च यस्तद्वेदोभयँ सह।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥ ११॥**

**विद्यामिति**। **विद्यां** च देवताज्ञानं चाविद्यां च कर्म च यस्तदुभयं विद्याविद्ये वेद अचरति **सह** एकत्रैव विद्योद्भासितामविद्यामाचरतीत्यर्थः। देवताज्ञान-सहकृतं कर्म स्वर्गसुखलाभेच्छाविवर्जितं सन्निष्कामं भवति। तथाभति स निष्काम-कर्मी **अविद्यया** कर्मणा **मृत्युं तीर्त्वा** मृत्युमित्युपलक्षणं, जन्ममृत्युचक्रमतिक्रम्य कर्मणा चित्तशुद्धिमवाप्य भोगेच्छाराहित्याद् भोगक्षेत्रस्थूलशरीरसंबन्धाद्विमुक्तः सन्नि-त्यर्थः। **विद्यया** देवताज्ञानेन तज्ज्ञानोत्कर्षेण ब्रह्मज्ञानेन च **अमृतम्** अपुनरावृत्तिलक्षणं ब्रह्मलोकं कल्पान्ते मोक्षं च अश्नुते प्राप्नोति। "तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभि संभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासांस्तान्। मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनां ब्रह्म गमयत्येष देवयानः पन्था" इति श्रुतेः॥ ११॥

उक्तमर्थं पुनः कार्यकारणोपासनव्यपदेशेनोपदिशति—

**अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते।**
**ततो भूय इव ते तमो य उ संभूत्यांरताः॥ १२॥**

अन्धं तम इति। सगुणब्रह्म जगतः कारणं, संभूतिर्वा। संभवति कार्य-रूपेणाविर्भवतीति संभूतिः, यच्च कार्यं जगत् तदसंभूतिरकारणम्। उपासनास्थले कार्याभिमानिन्यो देवता बोद्धव्या, यथाग्निर्वायुरित्यादयः। अन्धं तमः पितृलोकं प्रविशन्ति, ये असंभूतिं कार्यदेवता अग्न्यादीनुपासते तत्तद्रूपेण तेषामीश्वरस्वरूप-मनवगत्य फलकामनया। **ततो भूय इव** तमः प्रविशन्ति, **य उ संभूत्यां** जगत्कारणे सगुणब्रह्मणि, ईश्वरे रताः। देवताज्ञाने सत्यपि ब्रह्मज्ञानविहीनानां कर्माधिकारिणां तेषां कर्मत्यागाद्घोरतामसिकलोकप्राप्तिः॥ १२॥

**अन्यदेवाहुः संभवादन्यदाहुरसंभवात्।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे॥ १३॥**

**संभवात्** संभूतेः सगुणब्रह्मोपासनादित्यर्थः। **असंभवाद्** असंभूतेः कार्यदेव-तानामग्न्यादीनामुपासनादित्यर्थः। अन्यत् पूर्ववत्॥ १३॥

**संभूतिं च विनाशं च यस्तद्वेदोभयँसह ।**
**विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते ॥ १४ ॥**

**संभूतिं** सगुणब्रह्म । **विनाशं** विनाशं याति यः स विनाशः कार्यवर्गोऽग्न्यादयः कार्यदेवताः तान् । विनाश एव यो विनश्यति धर्मधर्मिणोरभेदात् । अन्यत् पूर्ववत् ॥ १४ ॥

विद्याविद्ययोः संभूत्यसंभूत्योर्वा समुच्चयकारिणाममृतत्वमुल्लिख्य, केन मार्गेण तदमृतत्वं भवति? मृत्युकालीनप्रार्थनाच्छलेन तत् प्रदर्शयति चतुर्भिर्मन्त्रैः—

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥**

**हिरण्मयेन पात्रेणेत्यादि । हिरण्मयेन** हिरण्यं ज्योतीरूपं तन्मयेन ज्योतिर्मयेन **पात्रेण** आच्छादकेन मण्डलेन **सत्यस्य** ब्रह्मणः; "तस्य ह वा ब्रह्मणो नाम सत्यम्" इति श्रुतेः । **अपिहितम्**; आच्छादितं **मुखम्**; मुखोपलक्षितं स्वरूपम् । "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" इति श्रुतेः । ज्योतिर्मयेन मण्डलेनादित्यपुरुषस्य ब्रह्मणः स्वरूपमाच्छादितम्, लोकदृष्टिबहिष्कृतमित्यर्थः । "आदित्यो ब्रह्मेत्यादेशः" इति श्रुतेः । **तत्** मुखं ब्रह्मस्वरूपं **त्वं पूषन्** कर्मफलविधानेन जीवानां पोषक! यदा जीवाः स्थूलशरीरेभ्यः तदनन्तरं देवः पूषा तान् स्वस्वकर्मोचितान् मार्गान् प्रापयति ।

"वयमु त्वा पथस्पते रथं न वाजसातये । धिये पूषन्नयुज्महि ॥"
"वि पथो वाजसातये चिनुहि वि मृधो जहि । साधन्तामुग्र नो धियः ॥"

उत्क्रामन्ति, तदा "रथी ऋतस्य नो भव", "विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु" इत्यादिश्रुतिभ्यः । **अपावृणु**; अनाच्छादितं कुरु । **सत्यधर्माय**; सत्यं धर्मो यस्य सोऽहं सत्यधर्मा तस्मै सत्यधर्माश्रिताय मह्यम् । किमर्थम्? **दृष्टये**; सत्यस्वरूपस्यादित्यपुरुषस्य प्रत्यक्षत्वाय । अनेन मन्त्रेण सत्यधर्माणामादित्यपुरुषप्राप्तिरुक्ता । आदित्याच्चे ब्रह्मलोकं गच्छन्ति । "आदित्यं

गच्छन्त्येतद्वै खलु लोकद्वारं विदुषां प्रपदनम्" इति श्रुतेः। प्रश्नोपनिषद्यप्युक्तं, "स तेजसि सूर्ये संपन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माजीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इति ॥ १५ ॥

पूष्णो देवस्य कर्मफलदातृत्वं तथा जगन्नियन्तृत्वादिधर्मवत्त्वमाह—

**पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन् समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि** ॥ १६ ॥

**पूषन्नित्यादिना**। हे **पूषन्** जगतः पोषक! हे **एकर्षे**। एक ऋषति गच्छतीत्ये-कर्षिरेकाकिगमनकारी। न कोऽपि द्वितीयोऽस्ति यस्य साहचर्येण स जीवानां मार्गान् विदध्यात्। यद्वा एकर्षिर्नामाग्निः। "क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः" इति श्रुतेः। स एवाग्निर्मार्गदेवरूपेण होतारं तदर्जितब्रह्मलोकं प्रापयति। हे **यम!** यमयति जीवानां कर्मफलानीति यमः। हे **सूर्य!** आदित्याख्यसूर्यदेवताया इच्छानुसारेण पूषा जीवान् स्वस्वलोकं प्रापयति, अतः स गौरवात् सूर्य एव। यद्वा जगत्सविता सूर्यः पूषदेवतारूपेण जीवान् कर्मानुसारेण स्वस्वस्थाने स्थापयति, अतः स सूर्य एव। "यास्ते पूषन्नावी अन्तः समुद्रे हिरण्मयीरन्तरीक्षे चरन्ति। ताभिर्यासि दूत्यां सूर्यस्य कामेन" इति श्रुतेः। हे **प्राजापत्य!** प्रजापतेरपत्यं पुमानिति प्राजापत्यः, प्रजापतिनन्दनः। कर्मफलप्रापणेन प्रजापालनात् स प्राजापत्यः। उक्तं च संहिताश्रुतौ—"विमुचो नपात्", विमुचः स्रष्टुः प्रजापतेः पुत्र इत्यर्थः। **समूह** संहर प्रशमय, **तेज** आदित्यदेवस्य ज्वालात्मको भावः। **यत्ते** तव पूष्णः **रूपं कल्याणतमं** परममङ्गलास्पदं **तत् ते** रूपं पश्यामि, यथा पश्यामि तथा कुर्वित्यर्थः। "शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि" इति श्रुतेः। प्रार्थकस्य देवताज्ञानं दर्शयति—**योऽसाविति**। **योऽसौ; असौ** पुरुषः सूर्यमण्डलमध्यवर्त्यादि-त्यपुरुषः, **सोऽहमस्मि,** अतस्तत्प्राप्तिं प्रार्थयामि। "य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि" इति श्रुतेः ॥ १६ ॥

पूष्णि प्रार्थनानन्तरं प्राणस्य देहादुत्क्रमणमासन्नं चिन्तयित्वा जीवानामनुष्ठितं कर्म स्मरति यदनुसारेण परलोकगतिर्भविष्यति—

**वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।**
**ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥**

**वायुरिति** । अथ मृत्युकाले वायुः यमः स्थूलदेहस्थप्राणरूपो वायुः देहादुत्क्रान्तः सन् **अनिलममृतं** मरणरहितो वायुर्भवत्विति शेषः । सूक्ष्मशरीरस्थप्राणरूपेणैव चिरं तिष्ठतु, यथा पुनः स्थूलदेहप्राप्तिर्न स्यात् । इदं शरीरं च प्राणस्योत्क्रमणान्ते अग्नौ दग्धं सत् **भस्मान्तं** भूयात् । ओमिति ब्रह्मप्रतीकः प्रणवः सत्यस्वरूपत्वात् सर्वसंकल्पारम्भे उच्चार्यः । हे **क्रतो !** आत्मानं संबोधयति हे क्रतुमय संकल्पमय त्वं, संकल्पा एव जीवानां जीवत्वकारणं तस्मात्ते तन्मयाः । स्मर । किं स्मरेत्? कृतमनुष्ठितं कर्म स्मर । "अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके भवति तथेतः प्रेत्य भवति" इति श्रुतेः । **क्रतो स्मर कृतं स्मरेति** पुनरुक्तिरादरार्थम् ॥ १७ ॥

पुनः प्रार्थयति—

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ १८ ॥**

इति शुक्लयजुर्वेदीयेशावास्योपनिषत् समाप्ता ।

**अग्ने नयेति** । हे अग्ने! यमहं यावज्जीवमीश्वरज्ञानेन जुहाव । **नय;** गमय, **सुपथा;** शोभनेन पुनरावर्तनवर्जितेन देवयानमार्गेण । **राये;** धनाय कर्मफलप्राप्तये **अस्मान्** मामित्यर्थः । **विश्वानि;** सर्वाणि । हे देव! द्योतनात्मक! **वयुनानि;** कर्माणि मयानुष्ठितं कर्मसंतानमित्यर्थः । **विद्वान्;** विजानन् । **युयोधि;** विदूरयास्मत् मम सकाशात् **जुहुराणं** प्रवञ्चकममृतत्ववारकम् **एनः** पापम् । **भूयिष्ठां ते** तुभ्यं **नम उक्तिं** नमस्कारवचनं विधेम । हे अग्ने ! अहं त्वां भूयोभूयः प्रणमामि, मां देवयानपथा ब्रह्मलोकममृतात्मकं प्रापयेत्यर्थः ॥ १८ ॥

## सिद्धान्तभाष्यम्

अत्राद्येन मन्त्रेण ब्रह्मणो जगन्मयत्वमुक्तं यद्विभाव्य न कोऽपि भोगेष्वाकङ्क्षां कुर्वीत। य आत्मविदिदं ज्ञात्वा सर्वत्रात्मानमेव पश्यन् कर्माणि करोति, न तस्य कर्मबन्धः स्यात्, स जीवन्मुक्तो भवति, ज्ञानकर्मणोर्विरोधोऽपि तस्मिन्न जायत इति द्वितीयमन्त्रार्थः। तृतीयेन मन्त्रेणात्मविदां जीवन्मुक्तानां संपूर्णविपरीता नास्तिका आत्महनो जना निर्दिष्टा ये परलोकगत्यभावादिहैव पृथिव्यां मृत्योरनन्तरं कीटमशकादिरूपेणातिघोरां गतिं प्राप्नुवन्ति। नास्तिकानां गतिं निर्दिश्यात्मनो निर्गुणसगुणभावद्वयं सर्वकर्माश्रयत्वं च संक्षेपेणाह चतुर्थमन्त्रे। पञ्चममन्त्रेण तद्भावद्वयं स्फूटितम्। षष्ठसप्तममन्त्राभ्यां जीवन्मुक्तस्यात्मज्ञानिनोऽद्वैतदृष्टिश्चित्तशुद्धिश्चोक्ते। अष्टममन्त्रेणात्मनः कूटस्थचित्स्वरूपलक्षणानि जीवेश्वरशरीररूपैः सगुणतटस्थलक्षणानि चोक्तानि। नवमादारभ्य चतुर्दशावधिभिर्मन्त्रैरविशुद्धचित्तानामल्पज्ञानिनामास्तिकानां द्विविधा गतिरुक्ता। तत्रान्धं तमः प्रविशन्तीत्यादिभ्यां नवमद्वादशमन्त्राभ्यां सकामकर्मिणां कर्मत्यागेऽनधिकारिणां कर्मत्यागिनां च पुनरावर्तनलक्षणा पितृयानगतिरुक्ता। एकादशचतुर्दशमन्त्राभ्यां ज्ञानकर्मसमुच्चयकारिणां सगुणब्रह्मोपासकानां निष्कामकर्मिणामपुनरावर्तनलक्षणा देवयानगतिरुक्ता। पञ्चदशादारभ्याष्टादशावधिभिर्मन्त्रैर्मृत्युकालीनप्रार्थनाच्छलेन देवयानमार्गाधिकारिणो देवताज्ञानमात्मस्वरूपोपलब्धिश्च दर्शिते।

इति श्रीसद्गुरुचरणाश्रयसाधकेन सत्यानन्देन विरचितं वासनेईशावास्योपनिषद्भाष्यं समाप्तम्। ॐ गुरुः॥

शान्तिपाठः।

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥
ॐ शान्तिः शान्तिः॥ हरिः ॐ॥

## ABBREVIATION USED IN THE INDEX

| | | | |
|---|---|---|---|
| ऋक्० | ऋक्संहिता | धा० पा० | धातुपाठः |
| ऐ० | ऐतरेयोपनिषत् | प्रश्न० | प्रश्नोपनिषत् |
| कठ० | कठोपनिषत् | बृह० | बृहदारण्यकोपनिषत् |
| कूर्म० | कूर्मपुराणम् | भ०गी० | भगवद्गीता |
| केन० | केनोपनिषत् | माण्डू० | माण्डूक्योपनिषत् |
| छान्दो० | छान्दोग्योपनिषत् | मुण्ड० | मुण्डकोपनिषत् |
| तैत्ति० | तैत्तिरीयोपनिषत् | श्वेत० | श्वेताश्वरोपनिषत् |

---

## INDEX OF QUOTATIONS